TRIVANDRUM SANSKRIT SERIES
No. CXXVI.
Śrī Citrodayamañjarī.
No. XV

# THE
# KARAṆAPADHATI

EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1937.

अनन्तशयनसंस्कृतग्रन्थावलिः।

ग्रन्थाङ्कः १२६.

श्रीचित्रोदयमञ्जरी।

ग्रन्थाङ्कः १५.

---

# करणपद्धतिः।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता।

---

सा च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता।

---

कोलम्बाब्दाः १११२. क्रिस्ताब्दाः १९३७

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वय
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री

# PREFACE.

This work Kāraṇapaddhati that elucidates an unprecedented school of astrological calculations highly commended by all great astrologers is indeed worthy of its name. It is well known throughout the length and breadth of the world that there lived in Kerala ever so many reputed scholars in astrological science who by direct perception and assisted by certain astronomical truths could see and show the planet system that adorns the celestial world. That the great and renowned authors of astrological treatises like the Bhāṣyakāra on the Āryabhaṭīya, great in themselves, hold up their own banners of pride and prestige in Kerala, is not a matter of surprise. It is enough to say that Parameśvarācārya and such others instructed their disciples in astrology like करतलामलक (with ease and clearness) and thus spread it far and wide. It is just and proper to presume that the author of the Karaṇapaddhati was one among those most reputed scholars.

"गुणहारगुणादीनां करणे कापि पद्धतिः"

By this, the object of the work is expressed in a compendium. This Paddhati by the authoritative statements in the form of Kārikas that form the quintessence of the work, is as undisputed and extensive as the high road and shines in brilliance expanding in consonance with the intellect of the reader. Though the Paddhati is confined to 10 chapters, I belive that it will open a bright prospect in all the directions, only if helped by an elaborate and explanatory Vṛtti. A commentary on the work in Malayālam was obtained but it was so worn out and unreadable that we had to give up the idea of getting it printed. We are sparing no pains in unearthing a complete manuscript of the same.

The author of the Paddhati is some Yajva, who took up his abode in the village of Śivapura (Trichur in Cochin).

"इति शिवपुरनामग्रामजः कोऽपि यज्वा
किमपि करणपद्धत्याह्वयं तन्त्ररूपम् ।
व्यधित गणितमेतत् सम्यगालोक्य सन्तः
कथितमिह विदन्तः सन्तु सन्तोषवन्तः ॥"

We know this much from the stanza at the close of the work. Even though he was born in the village called Śivapura, it is clear from the penultimate stanza of the work that he was by faith and principle a Vaiṣṇava.

"गणितमिदमशेषं युक्तियुक्तं पठन्तो
भुवि गणकजनानामग्रगण्या भवेयुः ।
अपि च मतिविशेषात् कालतुल्यस्य विष्णोः
सुपदमनुभवन्तो यान्ति तद्धाम शुद्धम् ॥"

Hoping for that auspicious moment when a complete and genuine history of the author who seems repugnant in unveiling himself, will be brought to light, I refrain from any further remarks.

Five manuscripts were followed in the preparation of the work for the Press.

| | | |
|---|---|---|
| 1. | That obtained from the library at the Kilimanur Palace. | |
| 2. | Do | Do of Mr. Vasudevan moossathu, Mangalappalli Illom, Aranmula. |
| 3. | Do | Do of Mr. Govinda Variar, Kuttanperur. |
| 4. | Do | Do of Karthika Thirunal Thampuratty of the Poonjar Rajamandira |
| 5. | Do | Do of the Raja of Edappalli. |

Acknowledging the deep indebtedness to the owners of the above mentioned libraries, I deem myself fortunate in presenting the work before the generous public

Trivandrum,
20-1-1112.

K. SAMBASIVA SASTRI.

॥ श्रीः ॥

# निवेदना ।

---

करणपद्धतिरसौ कामप्यपूर्वामशेषज्योतिषविद्वत्प्रियम्भावुकां पद्धतिं करणे प्रदर्शयन्ती भवत्यन्वर्थनामा । पुरा खलु केरलेषु बहवो विद्वांसः समपदलमण्डनायमानं प्रचक्रमपरोक्षीकृतदर्शनाः समवलम्ब्य बहूंस्तत्तान् ज्योतिःशास्त्रसिद्धान्तान् अदर्शनदर्शयन्निति च काप्यसौ प्रथा महती विश्वलोकविश्रुता विजयते । आर्यभटीयभाष्यकारादयः किल महान्तो ज्योतिस्तन्त्रप्रणेतारः स्वयं कृतार्थाः केरलेषु तं तमभिमानं सम्यगराशिपुरिति नायमपूर्वो वृत्तान्तः । किमधिकैः, परमेश्वराचार्यप्रभृतिभिः करतलामलकवज्ज्योतिस्तन्त्रं स्वशिष्येभ्यः समुपसर्प्य बहवः प्रचारात्तन्त्रस्यास्य व्यधायिषत । तेष्वेवं सुप्रसिद्धेषु तान्त्रिकेषु परमाचार्येषु कश्चिदयमप्यन्यतमः करणपद्धतिकारः स्यात् सम्भवेत् सुतरां महनीयः । इह च स्वप्रतिज्ञावाक्येनैव

"गुणहारगुणादीनां करणे कापि पद्धतिः ।"

(पृ० १. श्लो० २.)

इत्येवंरूपेण पद्धतेः प्राप्यं प्रमेयसारं मन्ये संगृहीतम् । खण्डखण्डैरपि गुलिकाप्रायैः कारिकात्मभिः प्रमाणवचनैरिह पद्धतिरियं राजपद्धतिवन्निवर्का विपुला च प्रदातृबुद्धिपरिमाणानुगुण्येन विचित्रां वृत्तिमवलम्ब्य प्रकाशते । दशाध्यायीपरिमितापि पद्धतिरियं दशस्वपि दिक्षु सञ्चारं प्रदर्शयितुमनुकूला विपुलया कयाचन वृत्त्या सावष्टम्भकरणसमनुगुणेति मे मतिः । अस्याः पद्धतेः समुपलब्धा कापि व्याख्या च, या केरलभाषात्मिका विकलबहुलखिलपातन्याकुला न प्रकाशनाय पर्याप्तेति सम्पूर्णमातृकान्तरसम्पादनश्रद्धालुभिरस्माभिः सद्यः समुपेक्षणीयतां प्राप्ता ॥

पद्धतेश्चास्याः कर्ता कोऽपि शिवपुरनामग्रामजः यज्वेति परम् ,

"इति शिवपुरनामग्रामजः कोऽपि यज्वा
किमपि करणपद्धत्याह्वयं तन्त्ररूपम् ।

व्यधित गणितमेतत् सम्यगालोक्य सन्तः
कथितमिह विदन्तः सन्तु सन्तोषवन्तः ॥"

(पृ० ३६. श्लो० १२.)

इति ग्रन्थान्तिमपद्यादवगम्यते । शिवपुरनामग्रामजस्याप्यस्य वैष्णव एव सिद्धान्तः स्वाभिमतमतप्रतिष्ठित इति ग्रन्थोपान्तिमपद्यादवगम्यते —

"गणितमिदमशेषं युक्तियुक्तं पठन्तो
भुवि गणकजनानामग्रगण्या भवेयुः ।
अपिच गतिविशेषात् कालतुल्यस्य विष्णोः
सुभृशमनुभवन्तो यान्ति तद्धाम शुद्धम् ॥"

सर्वथा स्वकीयवृत्तान्तनिवेदनपराङ्मुखानामेषां ग्रन्थकाराणामव्यभिचरितं सम्पूर्णं चरितमुपलब्धुमपारयिष्णुरहं तं तं शुभोदर्कमवसरं प्रतीक्षमाणः सद्यो विरमामि ॥

एतत्प्रकाशनावलम्बभूता मातृकाः पञ्च —

१. महामहिमश्री किळिमानूर्राजमन्दिरग्रन्थशालीया ।
२. आरन्मुळ मङ्गलप्पळ्ळिवास्तव्यवासुदेवन्नम्पूतिरस्वामिका ।
३. कुट्टन्पेरूर् गोविन्दवार्यग्रन्थशालासम्बन्धिनी ।
४. पून्ञार् राजमन्दिरस्थकार्त्तिकतिरुनाळ्राज्ञीग्रन्थशालान्तर्गता ।
५. इडप्पळ्ळिराजसम्बन्धिनी च ॥

एभ्यः सर्वेभ्योऽपि ग्रन्थशालाधिपतिभ्यो महतीं कृतज्ञतां समनुस्मरन् तामिमां पद्धतिं महाजनसमक्षमवतारयन् धन्यः सम्पद्ये ॥

अनन्तशयनम्,
२९-४-१११२.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# करणपद्धतिः ।

---

## प्रथमोऽध्यायः ।

मदीयहृदयाकाशे चिदानन्दमयो गुरुः ।
उदेतु सततं सम्यगज्ञानतिमिरारुणः ॥ १ ॥

मार्ताण्डादीन् ग्रहान् नत्वा तत्प्रसादाद् विलिख्यते ।
*गुणहारगुणादीनां करणे कापि पद्धतिः ॥ २ ॥*

नानाज्ञानप्रगल्भस्तिलबलम-
सुसूक्ष्मं धयेद्राजदम्भो
भद्रोदन्तोधरेन्द्रो निरलुसृग-
धिसौख्यं वरिष्ठोऽभिपङ्गः ।
दोर्दण्डामेऽद्रिनाथो विषमितावि-
पिनं चन्द्ररेखाम्बुखिन्ने-
त्यर्कादेः पर्ययाः स्युः क्षितिदिनम-
नृशंसःकलार्थीसमर्त्यैः ॥ ३ ॥

रूपाहतार्कभगणाः खलु सौरमासा
मासा रवीन्दुभगणान्तरमेव चान्द्राः ।
चन्द्रार्कमासविवरं च युगाधिमासा
मासाः पुनर्नगहता दिवसस्वरूपाः ॥ ४ ॥

चान्द्रमासा नगाभ्यस्ता भूदिनोनास्तिथिक्षयाः ।
भूदिनाढ्यार्कभगणा नाक्षत्रदिवसाः स्मृताः ॥ ५ ॥

एवं युगोक्ता भगणादयस्ते
दिनानयघ्नास्तु भवन्ति कल्पे ।
चतुर्दश स्युर्मनवोऽत्र तेषां
युगानि रासप्रमितानि यस्मात् ॥ ६ ॥

कृतत्रेताद्वापराख्यः कलिश्चैते युगाङ्घ्रयः ।
युगाङ्घ्रयस्तु कल्पेऽस्मिन् धिगादित्यमिता गताः ॥ ७ ॥
गतवर्षान्तकोलम्बवर्षास्तरळगान्विताः ।
कल्यब्दा धीस्थकालाढ्याः शकाब्दा वा भवन्ति ते ॥ ८ ॥

कल्यब्दतः प्रियहताद् गतमासयुक्ता-
च्चान्द्राख्यमासगुणिताद्रविमासलब्धः ।
नागाहतास्तिथियुतः क्षितिवासरघ्न-
श्चान्द्रैर्दिनैरपहृतो द्युगणोऽच्छवारात् ॥ ९ ॥

गुणहारान्तरगुणितं गुण्यं हाराहृतं तु वा गुण्ये ।
गुणकाधिकाल्पकत्वे स्वमृणं कुर्यात् फलस्य संसिद्ध्यै ॥

अहर्गणात् खेचरपर्ययघ्नाद्
धरादिनाप्ता भगणादिखेटाः ।
त्रिभान्वितं तत्र भवेद् विधूच्चं
विधुन्तुदश्चक्रदलाद् विशुद्धः ॥ ११ ॥

वाग्भावोनाच्छकाब्दाद् धनशतल-
यहान्मन्दवैलक्ष्यरागैः
प्राप्ताभिर्लिप्तिकाभिर्विरहितत-
नवश्चन्द्रतच्चुङ्गपाताः ।

---

१. 'स्मिन्' ख. पाठ.

शोभानीरूढसंविद्गणकनर-
हृतान्मागराप्ताः कुजाद्याः
संयुक्ता ज्ञारसौराः सुरगुरुभृ-
गुजौ वर्जितौ भानुवर्जम् ॥ १२ ॥

नाकाहतं भागितभानुमध्यं
हृत्वा धनाद्यैर्गुणकैरिहोक्तैः ।
मन्दादिहारैर्विभजेदवाप्ताः
कार्याः शशाङ्कादिषु तत्पराद्याः ॥ १३ ॥

धीभावाङ्कैः कलिदिनगणाल्लभ्यते गुण्यसंज्ञ-
स्तच्छेपोनः कलिदिनगणः खण्डसंज्ञो ग्रहाणाम् ।
गुण्यात् तत्तद्गणगुणितादूनमूर्च्छाशुभाप्ताः
खेटास्तुङ्गस्त्रिभवनयुतः षड्भशुद्धोऽत्र राहुः ॥ १४ ॥

गुण्यात् तिथीशगुणिताद् गिरितुङ्गनिघ्नं
पोतं त्यजेदथ धनादिगुणाहतं तत् ।
मन्दादिहारहृतपोतहृतं यथोक्तं
कुर्याद् विहङ्गमकलादिषु ते ध्रुवाः स्युः ॥ १५ ॥

भूदिनाद् द्युगणेनाप्तो हारस्तेन स्वपर्ययात् ।
भगणाद्या ग्रहास्तत्र शश्युच्चे भत्रयं क्षिपेत् ॥ १६ ॥

पाते तु मण्डलाच्छुद्धे चक्रार्धमपि योजयेत् ।
हारेण भूदिनाल्लब्धो द्युगणः खण्डसंज्ञकः ॥ १७ ॥

तेनाधिकमुत्तोनं वा क्रमादृणधनात्मकम् ।
स्वस्वमध्यमभुक्तिघ्नमेतत् भास्करपर्यगे ॥ १८ ॥

---

१. 'नीहता' क. पाठ. २. 'अ' ख पाठ.

ह्वारघ्नगिरितुङ्गोने धनादिस्वगुणाहते ।
मन्दादिस्वहरेणाप्ते स्वर्णं साम्यभिदावशात् ॥ १९ ॥

क्रमाद् धनमृणं कृत्वा ततो हारेण संहृतम् ।
कुर्याद् ग्रहेषु लिप्ताद्यं तदा ते स्युर्ध्रुवा इह ॥ २० ॥

शकाब्दसंस्कृतौ पाते शुद्ध एव भवेदृणम् ।
ततोऽन्यत्र धनं विद्यात् तद्भुक्तिभगणादिके ॥ २१ ॥

अर्कादेर्भगणाभ्यस्ता राशिचक्रस्य लिप्तिकाः ।
भूदिनैर्विहृतास्तेषां मध्यभुक्तिकलाः स्मृताः ॥ २२ ॥

नृपहतदिनकरभोगा-
निजनिजगुणकैर्धनादिभिर्गुणिताद्[1] ।
मन्दादिस्वहराप्ता-
श्चन्द्रादिगतौ प्रतत्पराः कार्याः ॥ २३ ॥

इष्टघ्नात् कुदिनात् स्वपर्ययहृतो हारस्त्वथेष्टो गुण-
स्तत्रोनाधिकमन्ननतत्परहतं स्वर्णात्मकं पर्यये ।
सौरे हारहते धनादिगुणिते मन्दादिहारोद्धृते
कृत्वानेन हराहतक्षितिदिनाल्लब्धो द्वितीयो हरः ॥ –

ज्ञानीन्द्रनिघ्ना गुणका धनाद्या
मन्दादिहारैर्विहृता यथोक्तम् ।
चन्द्रादिकानां भगणेषु कार्या-
स्तदा तु ते संस्कृतपर्ययाः स्युः ॥ २५ ॥

अज्ञानान्तकरा हतेन्दुभगणस्त्वाकाशकक्ष्या ततः
खेटानां दिवसोक्तयोजनगतिर्धात्रीदिनैरुद्धृता ।

---

१. 'कं' ख. पाठ. २. 'द्द' च. पाठ..

कक्ष्या या नभसः स्वपर्ययहृता कक्ष्या ग्रहाणां रवेः
कक्ष्या नीतिसमाहृता निगदिता नक्षत्रकक्ष्या बुधैः ॥
अथवा नयनाभ्यस्ता मध्यभुक्तिकला विधोः ।
स्वस्वकक्ष्यासु खेटानां दिनयोजनभुक्तयः ॥ २७ ॥

गुणो भवेद् यो धनभुक्तिरेषा
तदा स्वकक्ष्यैव हरो ग्रहाणाम् ।
कलागतिश्चेद् गुणकोऽत्र हारो
भचक्रलिप्ता निजमध्यनीतौ ॥ २८ ॥

इति करणपद्धतौ प्रथमोऽध्यायः ॥

---

अथ द्वितीयोऽध्यायः ।

मन्दादिहारगुणिता भगणा युतोना
ज्ञानीन्द्रसङ्गुणधनादिगुणैर्गुणाः स्युः ।
मन्दादिहारहतभूदिवसाश्च हाराः
प्रोक्ता महागुणहरास्त इमेऽपवर्त्याः ॥ १ ॥

राश्योरन्योन्यहरणे शेषः स्यादपवर्तनम् ।
तेन तौ विहृतौ राशी दृढाख्यावपवर्तितौ ॥ २ ॥

महागुणघ्नाद् द्युगणादभीष्टा-
न्महाहराप्ता भगणादिखेटाः ।
कल्यादिजैः स्वध्रुवकैः समेताः
फणी तु तत्र ध्रुवतो विशोध्यः ॥ ३ ॥

गोत्रोत्तुङ्गहताद् धनादिगुणतो मन्दादिहारोद्धृताः
कल्यादौ रजनीकरादिविहगा लिप्तादयः स्युः क्रमात् ।

तेषामिन्दुजभूमिजार्कतनयाः शोध्याः पुनर्मण्डलात्
तुङ्गो भत्रयसंयुतस्तुहिनगोः पातस्तु षड्भान्वितः ॥४॥

अन्योन्यं विभजेन्महागुणहरौ यावद्विभक्तेऽल्पता
तावल्लब्धफलानि रूपमपि च न्यस्येदधोऽधः क्रमात् ।
प्रक्षिप्यान्त्यमुपान्तिमेन गुणिते स्वोर्ध्वे तदन्त्यं त्यजेद्
भूयोऽप्येष विधिर्भवेद् गुणहरौ स्यातां तदोर्ध्वस्थितौ
[ ॥ ५ ॥

अन्योन्याहृतभाज्यहारकफलं सर्वं त्वधोऽधो न्यसे-
देकत्राद्यफलेन हीनमपरत्रैकं द्वयोश्चोपरि ।
कुर्याद् वल्युपसंहृतिं ह्युपरितः पूर्वप्रणाशं विना
त्याज्यं तत्प्रथमोर्ध्वगं हरगुणाश्शिष्टाश्च वा स्वेच्छया
[॥ ६ ॥

स्वल्पौ हारगुणौ महागुणहरक्षुण्णौ तयोरन्तरं
स्वर्णाख्यं क्रमशो महाहरहते स्वल्पे गुणेऽल्पेऽधिके ।
तेनानन्तपुराहतेन हरयोर्घाताद् द्वितीयो हर-
स्तच्छिष्टेन तथा हरत्रयवधाल्लब्धस्तृतीयो हरः ॥७॥

यद्वा मिथोविहृतहारगुणोत्थशेषै-
र्नूलातपत्रगुणितैर्महतोऽत्र हारात् ।
तत्तद्धराभिनिहताद् विहृता द्वितीय-
हारा भवन्त्यृणधनात्मकलिप्तिकानाम् ॥ ८ ॥

महागुणास्ते भगणाः प्रकल्प्या
महाहरा भूदिवसाश्च तद्वत् ।
सर्वत्र ते तुल्यहराश्च कार्याः
परस्परं योगवियोगकाले ॥ ९ ॥

अन्योन्यहारगुणितौ
गुणकौ हारौ च तुल्यहारौ स्तः ।
तत्रापवर्तिताभ्यां
हाराभ्यां वा परस्परं गुणयेत् ॥ १० ॥

इति करणपद्धतौ द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

विधोस्तदुच्चस्य च पर्ययान्तरं
धरादिनौघं च मिथोऽथ संहरेत् ।
फलैरमीभिर्गुणहारकान्नयेद्
यथोदितं केन्द्रभवा भवन्ति ते ॥ १ ॥

देवेन्द्रशर्मैक्यदिनेन्दुतुङ्ग-
भेदार्धयुक्तेष्टदिनेन्दुकेन्द्रात् ।
लिप्तीकृतात् केन्द्रहरैरभीष्टै-
नाहत्य नानार्तिपरैरवाप्ताः ॥ २ ॥

अभीष्टहारोर्ध्वहरेण हत्वा
पूर्वोदिताभीष्टहरेण हृत्वा ।
तत्राधिकोनं द्युगणाद् विशोध्यं
हरौजयुग्मत्ववशात् क्रमेण ॥ ३ ॥

शिष्टं शशाङ्कोदितवाक्यखण्ड-
स्तस्य ध्रुवस्तद्दिवसस्फुटेन्दुः ।
तथा हराणां ध्रुवकाश्च तैस्तै-
र्दिनैस्समानीतविधुस्फुटानि ॥ ४ ॥

तत्तद्दिनोत्थेन्दुतदुच्चभेद-
लिप्ताहतात् केन्द्रहरादभीष्टात् ।
केन्द्राण्यनन्तोत्करसंहृतानि
स्वर्णात्मकानीन्द्वधिकाल्पकत्वे ॥ ५ ॥

अभीष्टहारस्य गुणं तदीयं
मिथो हरेत्तद्गुणहारशेषाः ।
अभीष्टहारोर्ध्वगहारकाणां
धनर्णकेन्द्राण्यथवा भवन्ति ॥ ६ ॥

अभीष्टहारस्य गुणोऽयमुक्तः
संस्कारहारानयने तु भाज्यः ।
केन्द्राण्यमूनि स्वहरोद्धृतानां
क्रमात् फलानां गुणका भवेयुः ॥ ७ ॥

शीतांशोर्विकलादितस्सकलगैर्युक्तात् स्वतुङ्गोनिता-
ल्लिप्तीकृत्य कपोतदुर्जयहतात् नूत्नातपत्रोद्धृतम् ।
श्रीसङ्गप्रियताडितं विभजतात् कापोतदेहायनै-
स्तच्छिष्टं द्युगणात् त्यजेत् तुहिनगोर्वाक्योक्तखण्डाप्तये
[॥ ८ ॥

लब्धं तत्र तु कालनागगुणितं
श्रीसङ्गरम्यैर्भजेत्
तच्छिष्टोनहरोनितो दिनगणो
वा वाक्यखण्डो भवेत् ।
तत्राप्ते किल देवरैर्विनिहते
कालानलैः संहृते
शेषं वा द्युगणात् त्यजेत् तुहिनगो-
र्वाक्योक्तखण्डाप्तये ॥ ९ ॥

तद्दिनेन्दूच्चयोर्भेदात् पर्याप्तहृद्याहतात् ।
केन्द्राख्यं चक्रलिप्ताप्तं स्फुटेन्दुस्तत्र हि ध्रुवः ॥ १०॥

शिवोदितं कम्पितदुर्जयं च
छिन्द्यान्मिथो व्युत्क्रमतोऽत्र शेषाः ।
श्रीसङ्गरम्यादिहराहृतानां
धनर्णरूपा गुणका भवन्ति ॥ ११ ॥

देवेन्द्रसङ्ख्यावधिकैरेकाद्येकोत्तरैर्दिनैः ।
पृथक् पृथक् स्फुटीकुर्यादिन्दुं तद्वाक्यसिद्धये ॥ १२ ॥

तुङ्गोनितादेव विधोर्यथोक्तं
नीते च खण्डे शशितुङ्गयोगः ।
तत्रेष्टहाराधिकतावशात् त-
द्योगस्य सूर्योदयसन्निकर्षः ॥ १३ ॥

तद्वासरोत्थतुहिनांशुतदुच्चभेद-
लिप्ताहताभिमतकेन्द्रहराद्र गुणाप्ताः ।
योगोदयान्तरभवा ह्यसवः क्रमेण
स्वर्णात्मकास्तुहिनगोरधिकाल्पकत्वे ॥ १४ ॥

प्राणैस्तैः स्वगुणाभ्यस्तैः स्वहाराप्तैश्च संस्कृतौ ।
चन्द्रतुङ्गविभौ स्यातां तुल्यौ योगध्रुवाह्वयौ ॥ १५ ॥
एवमेव पुनरिष्टखेटयोर्योगमिष्टसमये समानयेत् ।
इष्टकालखगमध्यमान्तरक्ष्मादिनेष्टखगपर्ययान्तरैः
[॥ १६ ॥

इति करणपद्धतौ तृतीयोऽध्यायः ॥

०

## अथ चतुर्थोऽध्यायः ।

चन्द्रादन्यविहङ्गानां मध्यानयनहारकाः ।
मन्दकेन्द्रहरा ज्ञेयाः सौरा एव ज्ञशुक्रयोः ॥ १ ॥

भास्करेष्टखगपर्ययान्तरं
भूदिनं च विभजेत् परस्परम् ।
हारकानिह फलैः समानयेत्
ते भवन्ति चलकेन्द्रहारकाः ॥ २ ॥

मध्याद् ग्रहाणां स्वमृदूच्चहीना-
च्छीघ्रोच्चतो मध्यविवर्जिताच्च ।
खण्डं नयेत् केन्द्रहरैस्तदीयै-
रिन्दूक्तवन्निर्गणितोदितास्ते ॥ ३ ॥

गुणहाराविशेषोक्तौ सर्वत्रापि हरो महान् ।
हाराधिके गुणे हाराननाद्यैश्च फलैर्नयेत् ॥ ४ ॥

हारः सूर्यविहङ्गयोर्भगणयोर्भेदो गुणोऽल्पस्तयो-
स्ताभ्यामत्र परस्पराप्तफलजा हारा धराहाहृताः ।
भक्तास्तेन हरेण वाक्यकरणोक्ता मण्डलाः स्युस्तथै-
वान्योन्याहृतशिष्टचक्रकलिकाभ्यासाद् धनर्णध्रुवाः
[ ॥ ५ ॥

मण्डलानयने नीता हारा मण्डलहारकाः ।
तैः शोध्यमानयेद् यद्वा सध्रुवैः स्वल्पमण्डलैः ॥ ६ ॥

अभिमतदिनविहगोना-
च्छीघ्रोच्चाद् भुक्तिविवरलब्धोनः ।

अभिमतदिवसगणोऽयं
शीघ्रोच्चविहङ्गयोगसमयः स्यात् ॥ ७ ॥

यद्वेष्टमध्यविहगोनचलोच्चलिप्ता-
संवर्धितक्षितिदिनाद् भगणान्तराप्तम् ।
अज्ञातपरकृतमिष्टदिनाद् विशोध्यं
शिष्टं चलोच्चखगमध्यमयोगकालः ॥ ८ ॥

तत्कालमध्यविहगं स्वमृदूच्चहीनं
लिप्तीकृतं तु निजमण्डलहारकेषु ।
इष्टेन सङ्गुणमनन्तपुरेण भक्त-
मिष्टोर्ध्वहारहतमिष्टहरेण कृत्वा ॥ ९ ॥

ऊनाधिकं तदिह हारसमासमखे
धात्रीदिनघ्नमुभयोर्भगणान्तराप्तम् ।
शीघ्रोच्चमध्यमविहङ्गमयोगकाला-
च्छोध्यं तदा भवति शोध्यदिनं ग्रहाणाम् ॥ १० ॥

तत्कालग्रहमध्यस्य मन्दतुङ्गस्य चान्तरम् ।
शोध्यध्रुवं धनर्णाख्यमुच्चान्मध्येऽधिकेऽल्पके ॥ ११ ॥

शीघ्रोच्चग्रहमध्ययोः सदृशयोस्तन्मध्यतुङ्गान्तरं
लिप्तीकृत्य हरेद् ध्रुवैर्ऋणधनैर्मध्यग्रहेऽल्पेऽधिके ।
शिष्टं शोध्यदिनध्रुवं ध्रुवफलक्षुण्णाश्च तन्मण्डला-
च्छीघ्रोच्चग्रहमध्यसाम्यसमयाच्छोध्याः स्वशोध्या-
[प्तये ॥ १२ ॥

---

१. 'न्द्र' ख. घ. पाठः.

शीघ्रोच्चमध्यग्रहयोगकालो
मौढ्योक्तकालार्धदिनैः समेतः ।
मौढ्यावसानद्युगणः सखण्डो
मौढ्येऽत्र हाराश्चलकेन्द्रहाराः ॥ १३ ॥

गुणहारौ ग्रहादित्यभगणौ तौ मिथो हरेत् ।
हारकास्तत्फलैर्नीता भवन्त्यगणितोदिताः ॥ १४ ॥

मध्याब्दान्तसमानीतमध्यग्रहदिनेशयोः ।
अल्पभोगं महाभोगात् त्यक्त्वा शिष्टं कलीकृतम् ॥ १५ ॥
हारेष्वगणितप्रोक्तेष्वभीष्टेन समाहतम् ।
चक्रलिप्ताप्तमिष्टोर्ध्वहारकेण हृतं पुनः ॥ १६ ॥
इष्टहारेण संहृत्य तत्रोनमधिकं तु वा ।
इष्टहारयुगोजत्ववशात् त्याज्यं शकाब्दतः ॥ १७ ॥
शिष्टाब्दान्ते भवेद् योग इष्टग्रहदिनेशयोः ।
तस्मादगणितप्रोक्तः शोध्याब्दः सोऽयमीरितः ॥ १८ ॥

कल्यब्दघ्नाधिमासा दिनकरभगणैः
संहृता भूदिनघ्नाः
कल्यादीन्दुध्रुवांशक्षितिदिनवधतो
निश्चलांशैर्विहीनाः ।
भक्तास्तत्राधिमासैर्भवति दिनगणः
सोऽधिमासोक्तखण्डो-
ऽथान्योन्याप्ताधिमासक्षितिदिनरचिता
हारकास्तत्र हाराः ॥ १९ ॥

हृत्वा परस्परमथो युगचान्द्रमासं
द्विघ्नार्कपातभगणैक्यमपीह लब्धैः ।
हारान्नयेत् पुनरमी धरणीदिनघ्नाः
स्युश्चान्द्रमासविहृता ग्रहणोक्तहाराः ॥ २० ॥

नीत्वा मध्यार्कचन्द्रौ फणिनमपि दृशा
मध्यपर्वान्तकाले
पातोनार्केन्दुलिप्ता लुनदगगुणिता-
श्चक्रलिप्ताविभक्ताः ।
तापस्थानेन हृत्वा लुनदगविहृते
शिष्टतो भूदिनघ्ना-
श्चान्द्रैर्मासैरवाप्तं त्यजतु दिनगणात्
सोपरागोक्तखण्डः ॥ २१ ॥

इति करणपद्धतौ चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ।

ग्रहणग्रहयोगाद्यैर्ये ग्रहाः सुपरीक्षिताः ।
दृक्समास्तत्समाः कल्पे कल्प्या वा भगणादयः ॥ १ ॥

परीक्षितस्य खेटस्य तन्त्रानीतस्य चान्तरम् ।
लिप्तीकृत्यार्कभगणैः कल्पोक्तैश्च समाहतम् ॥ २ ॥

तन्त्रनिर्माणकालस्य परीक्षासमयस्य च ।
अन्तरालगतैरब्दै राशिचक्रकलाहतैः ॥ ३ ॥

हृत्वाप्तं तन्त्रनीतस्य ग्रहस्याल्पाधिकत्वतः ।
[illegible] कुर्याच्चैव विधौ रवेः ॥ ४ ॥

तत्पर्ययाभिहतकल्पगताब्दवृन्दात्
कल्पार्कपर्ययहृतं भगणादिमध्यम् ।
त्यक्त्वा परीक्षितसमान्तविहङ्गमध्या-
च्छिष्टं वदन्ति किल कल्पमुखध्रुवाख्यम् ॥ ५ ॥

कल्पोक्तभूदिवसकल्पगताब्दघातात्
कल्पोक्तभानुभगणाहृतवासरादेः ।
सप्ताप्तशिष्टरहितेष्टसमान्तकालः
कल्पादिजो भवति सङ्क्रमणध्रुवोऽयम् ॥ ६ ॥

तन्त्रानीतपरीक्षितारुणभिदा-
लिप्ताः पृथग् भूदिनैः
कल्पोक्तैर्ग्रहपर्ययैश्च गुणिताः
कल्पार्कवर्षाहृताः ।
प्राणाः सङ्क्रमणग्रहेषु कलिकाः
कल्पादिगेषु क्रमात्
स्वर्णं तत्र परीक्षिते दिनकरे
स्वल्पेऽधिके ते स्फुटाः ॥ ७ ॥

एवं तु ध्रुवसङ्घातः कल्पादौ नैव युज्यते ।
इति तत्परिहारार्थं संस्कारान्तरमिष्यते ॥ ८ ॥

हृत्वा मिथः कल्पगताब्दवृन्दं
कल्पोदितं भास्करपर्ययं च ।
लब्धैः समानीतहरेष्वभीष्टे-
नाहत्य कल्पादिखगध्रुवांशान् ॥ ९ ॥

हत्वातुलैराप्तमभीष्टहार-
स्योर्ध्वस्थहारेण निहत्य हत्वा ।
पूर्वोदिताभीष्टहरेण शिष्टं
हारौजयुग्मत्ववशाद् धनर्णम् ॥ १० ॥

कल्पोदिते संस्कृतपर्ययौघे
ग्रहस्य कुर्यात् स तदा स्फुटः स्यात् ।
इष्टघ्नहारोनयुतः स दृष्टः
क्वचिद् ग्रहो दृष्टिसमो यतः स्यात् ॥ ११ ॥

ताभ्यां हराभ्यां तु तथा मृदूच्चात्
पाताच्च नीतो भगणस्तदीयः ।
हाराद्विशोध्योऽयमृणात्मकश्चेत्
पातस्य सर्वं विपरीतमेव ॥ १२ ॥

कल्पगतं वर्षगणं सताहतकल्पभानुभगणमपि ।
हृत्वा पुनरन्योन्यं तत्राप्तैर्हारकाः कार्याः ॥ १३ ॥

हारेषु तेष्वभिमतेन पुनर्विनिघ्नात्
कल्पादिसङ्क्रमदिनात् खलु सतभक्तम् ।
इष्टोर्ध्वहारहतामिष्टहरेण तष्टं
प्राग्वच्च कल्पकुदिने स्वमृणं प्रकुर्यात् ॥ १४ ॥

कल्पादीनां प्रमाणं तु बहुधा कल्प्यते बुधैः ।
उपेयस्यैव नियमो नोपायस्येति यत् ततः ॥ १५ ॥

---

१. 'सप्तहतं कल्पगतं स' ख. पाठः.

कल्पे युगानि तु सहस्रमुशन्ति केचित्
तत्रैकसप्ततियुगानि पृथङ् मनूनाम् ।
आद्यन्तयोश्च विवरे च तथैव तेषां
स्युः सन्धयो युगदशांशचतुष्कतुल्याः ॥ १६ ॥

मनवोऽथ चतुर्दशैव कल्पे
पृथुतुल्यानि युगानि चैव तेषाम् ।
त्रियुगानि गतानि सृष्टितः प्राक्
परतः स्युः प्रलयात् तथाहुरन्ये ॥ १७ ॥

युगस्य दशमो भागो भोगप्रियहतः क्रमात् ।
कृतादीनां प्रमाणं स्यात् पक्षयोरनयोर्द्वयोः ॥ १८ ॥

कल्पेऽस्मिन् सप्तमस्यास्य वैवस्वतमनोर्युगे ।
अष्टाविंशे कलिः सर्वैर्वर्तमान इह स्मृतः ॥ १९ ॥

इति करणपद्धतौ पञ्चमोऽध्यायः ॥

---

अथ षष्ठोऽध्यायः ।

व्यासाच्चतुर्घ्नाद् बहुशः पृथक्स्थात्
त्रिपञ्चसप्ताद्ययुगाहृतानि ।
व्यासे चतुर्घ्ने क्रमशस्त्वृणं स्वं
कुर्यात् तदा स्यात् परिधिः सुसूक्ष्मः ॥ १ ॥

व्यासाद् वनसङ्गुणितात्
पृथगाप्तं त्र्याद्ययुग्विमूलघनैः ।
त्रिगुणव्यासे स्वमृणं
क्रमशः कृत्वापि परिधिरानेयः ॥ २ ॥

हार्यं हारैक्यभेदघ्नं हारघातेन वा हरेत् ।
हार्याङ्कारयुगावाप्तफलयोगान्तराप्तये ॥ ३ ॥

वर्गैर्युजां वा द्विगुणैर्निरेकै-
र्वर्गीकृतैर्वर्जितयुग्मवर्गैः ।
व्यासं च षड्घ्नं विभजेत् फलं स्वं
व्यासे त्रिनिघ्ने परिधिस्तदा स्यात् ॥ ४ ॥

व्यासादभीष्टान्महतोऽस्य वृत्तं
नीत्वैवमाभ्यां तु मिथो विभक्तैः ।
कार्या यथोक्तं गुणकारहारा-
स्ते व्यासवृत्तानि तदा भवन्ति ॥ ५ ॥

गुणहारकभूतैस्तैर्व्यासवृत्तैर्यथोदितम् ।
इष्टवृत्तान्नयेद् व्यासं व्यासाद् वृत्तं विपर्ययात् ॥ ६ ॥

अनूननूत्नाननुनुन्ननित्यै-
स्समाहताश्चक्रकला विभक्ताः ।
चण्डांशुचन्द्राधमकुम्भिपालै-
र्व्यासस्तदर्धं त्रिभमौर्विका स्यात् ॥ ७ ॥

त्रिज्यार्धमेकराशिज्या त्रिज्यावर्गार्धतः पदम् ।
भवेदध्यर्धराशिज्या ताभ्यामन्यगुणान् नयेत् ॥ ८ ॥

त्रिज्येष्टज्यावधाद्व्योनत्रिज्यावर्गोत्थमूलयोः ।
भेदयोगदले त्विष्टचापार्धभुजकोटिके ॥ ९ ॥

यद्वेष्टचापगुणतच्छरवर्गयोग-
मूलार्धमिष्टधनुरर्धगुणः प्रदिष्टः ।

---

१. 'वृत्तं नयेद् हृदय [illegible]' क. स. ५८ ,

ज्यानां निजत्रिगुणवर्गविशेषमूलं
कोटिस्तदूनसहितौ त्रिगुणौ स्वबाणौ ॥ १० ॥

यद्वेष्टकोट्याहतविस्तरार्ध-
नोनान्वितौ व्यासदलस्य वर्गौ ।
अर्धीकृतौ तौ पदिताबभीष्ट-
चापार्धदोःकोटिगुणौ भवेताम् ॥ ११ ॥

चापाच्च तत्तत्फलतोऽपि तद्व-
च्चापाहताद् द्व्यादिहतत्रिमौर्व्या ।
लब्धानि युग्मानि फलान्यधोध-
श्चापादयुग्मानि च विस्तरार्धात् ॥ १२ ॥

विन्यस्य चोपर्युपरि त्यजेत् त-
च्छेषौ भुजाकोटिगुणौ भवेताम् ।
एकादिसङ्ख्याहतभाष्टमांशा-
देवं चतुर्विंशतिमौर्विकाः स्युः ॥ १३ ॥

विद्वांस्तुन्नबलः कवीशनिचय-
स्सर्वार्थशीलः स्थिरो
निर्विद्धाङ्गनरेन्द्ररुङ्निगदिते-
ष्वेषु क्रमात् पञ्चसु ।
आधस्त्याद् गुणितादभीष्टधनुषः
कृत्या विहृत्यान्तिम-
स्याप्तं शोध्यमुपर्युपर्यथ घने-
नैवं धनुष्यन्ततः ॥ १४ ॥

स्तेनः स्त्रीपिशुनस्सुगन्धिनगनुन्नद्राङ्गभव्यासनो
मीनाङ्गो नरसिंह ऊनधनकृद्भूरेव पट्स्वेषु तु ।
आधस्त्याद् गुणितादभीष्टधनुषः कृत्वा विहृत्यान्तिम-
स्याप्तं शोध्यमुपर्युपर्यथ फलं स्यादुत्क्रमस्यान्त्य-
[जम् ॥ १५ ॥

अन्त्योपान्त्यगुणान्तरेण विहृता त्रिज्यात्र हारो भवे-
दाद्यज्या स्वहरांशकेन रहिता द्विघ्ना द्वितीया भवेत् ।
जीवा सा द्विगुणा स्वतो हरहृतेनाद्यज्यया चोनिता
जीवा सैव तृतीयकैवमपराः कार्यास्तुरीयादयः ॥१६॥

आद्येष्टजीवाकृतिभेदवर्गा-
दिष्टाद्यजीवाकृतिसंहृता तु ।
इष्टोर्ध्वजीवाकृतिरेतया त-
त्रेष्टाद्यजीवाकृतिरेव लब्धा ॥ १७ ॥

व्यासार्धेन हतादभीष्टगुणतः कोट्याप्तमाद्यं फलं
ज्यावर्गेण विनिघ्नमादिमफलं तत्तत्फलं चाहरेत् ।
कृत्वा कोटिगुणस्य तत्र तु फलेष्वेकत्रिपञ्चादिभि-
र्भक्तेष्वोजयुतेस्त्यजेत् समयुतिं जीवाधनुश्शिष्यते
॥ १८ ॥

स्वल्पचापघनषष्ठभागतो
विस्तरार्धकृतिभक्तवर्जितम् ।
शिष्टचापमिह शिञ्जिनी भवेत्
तद्युतोऽल्पकगुणोऽसकृद् धनुः ॥ १९ ॥

एकद्वित्र्यादिसङ्ख्याघ्नत्रिज्यावर्गेनयांशतः ।
घनमूलं हि चापज्या स्वसङ्ख्योनाविलिप्तिकम् ॥ २० ॥

इति करणपद्धतौ षष्ठोऽध्यायः ॥

---

अथ सप्तमोऽध्यायः ।

भानोर्गानं विधोः स्थानं स्फुटवृत्तकलाः सदा ।
वन्द्यो दिव्यो गुणीकृष्णः सूनुर्मानी कलाधरः ॥ १ ॥

स्थानं दानं तपो मान्यं भानुः प्राज्ञोऽधमः समः ।
धनी लोको धनं दानं भौमात् परिधिलिप्तिकाः ॥

मन्दशीघ्रक्रमात् केन्द्रस्यौजयुग्मपदादिगाः ।
पृथगेकैकपादोक्ता असुरैरपवर्तिताः ॥ ३ ॥

वृत्तान्तरेणाहतबाहुजीवां
हृत्वा त्रिमौर्व्या फलमोजवृत्ते ।
क्रमाद् धनर्णं विदुरोजवृत्त-
स्याल्पाधिकत्वे स्फुटवृत्तसिद्ध्यै ॥ ४ ॥

मान्देन स्फुटवृत्तेन निहतादिष्टदोर्गुणात् ।
नन्दाप्तं चापितं मान्दमर्कादीनां भुजाफलम् ॥ ५ ॥

शेघ्रे दोःकोटिजीवे स्फुटपरिधिहते
नन्दभक्ते फले ते
व्यासार्धे कोटिजं तद् धनमिह
मकरादावृणं कर्कटादौ ।

---

१. 'स्थानार्थमुक्ता गुह्यानिर्मार्विका.' क. पाठः २. ख. पाठः.

कृत्वा तद्वर्गयुक्ताद् भुजफलकृतितः
स्यात् पदं शीघ्रकर्ण-
स्त्रिज्याघ्नाद् दोःफलात्तद्विहृतफलधनुः
कर्किनक्रादिजीवाः ॥ ६ ॥

अभिमतदोःकोटिगुणा-
वोजपरिध्याहतौ च नन्दाप्तौ ।
दोःकोटिफले स्याता-
मनयोर्वा वृत्तसंस्कृतिं कुर्यात् ॥ ७ ॥

द्विघ्नात् तद्बाहुचापाद् भुजगुणमपि त-
त्कोटिजीवां च नीत्वा
कर्क्यैणादौ तु कोटीगुणयुतरहिता
त्रिज्यका तत्र बाणः ।
बाणार्धाद् दोर्गुणार्धादपि परिधिभिदा-
सङ्गुणान्नन्दभक्तं
जध्याद दोःकोटिजाभ्यां क्षिपतु च समवृं-
तेऽधिके ते स्फुटे स्तः ॥ ८ ॥

मान्दे स्वेवं समानीतं दोःफलं चापितं स्फुटम् ।
शैघ्रे त्रिज्याहतं कर्णभक्तं चापीकृतं तथा ॥ ९ ॥

स्फुटवृत्तमिनादीनां कामानलसमाहनम् ।
कंसेन विभजेल्लब्धं भवेदन्त्यफलाह्वयम् ॥ १० ॥

कोटिज्यान्त्यफलेन हीनमहिता या कर्किनक्रादित-
स्तद्दोर्ज्याकृतियोगमूलमुदितः कर्णोऽमुना संहरेत् ।

दोर्ज्यां संस्कृतकोटिकामपि तथा व्यासार्धसंवर्धितां
तच्चापं भुजकोटिचापरहितं ज्या कर्किनक्रादिका॥
कोटिज्याल्पा चरमफलतः कर्कटादौ यदि स्यात्
त्रिज्याभ्यस्तादिह भुजगुणात् कर्णभक्तस्य चापम्।
दोश्चापाढ्यं भगणदलतस्त्यज्यतां संस्कृतायाः
कोट्यास्तद्वच्छ्रुतिहृतधनुः क्षिप्यतां कोटिचापे॥ १२॥

अथवान्त्यफलाभ्यस्ताद् दोर्गुणात् कर्णसंहृतम्।
चापीकृतं भवेदत्र कर्किनक्रादिमौर्विका॥ १३॥

अन्त्यं फलं कोटिगुणे द्विनिघ्ने
कृत्वामुनैवान्त्यफलेन हत्वा।
संस्कृत्य तद् व्यासदलस्य वर्गे
मूलीकृतो वा भवतीह कर्णः॥ १४॥

मृगकर्कटकादिदोःफलात् तद्-
भुजचापोनयुताद् भुजागुणो यः।
अमुना विभजेद् भुजाफलज्या-
मजनिघ्नीं फलमत्र शीघ्रवृत्तम्॥ १५॥

अन्त्यभुजाफलनीतं
वृत्तं स्यादन्त्यवृत्तमोजपदे।
एकभदोःफलनीतं
द्विगुणितमन्त्योनितं भवेदाद्यम्॥ १६॥

राश्यन्तभानुस्फुटतो मृदूच्चं
विशोध्य दोःकोटिगुणौ गृहीत्वा।

त्रिसङ्गुणौ तावथ नन्दभक्तौ
क्रमेण दोःकोटिफले भवेताम् ॥ १७ ॥
कोटीफलं कर्किमृगादिजातं
त्रिमौर्विकायां स्वमृणं च कृत्वा ।
तद्वर्गतो दोःफलवर्गयुक्ता-
न्मूलं विपर्यासकृतोऽत्र कर्णः ॥ १८ ॥

त्रिज्याहताद् दोःफलतोऽमुनाप्तं
चापीकृतं मेषतुलादितस्तद् ।
राश्यन्त्यभानौ स्वमृणं च कुर्यात्
तदा भवेत् सङ्क्रमणार्कमध्यम् ॥ १९ ॥
सूर्येन्द्वोरेवमेवेष्टस्फुटात् तन्मध्यमानयेत् ।
तत्रोक्तव्यस्तकर्णात्तत्त्रिज्यावर्गो मृदुश्रुतिः ॥ २० ॥
मृदुश्रुतिहतात् कक्ष्यावृत्ताच्चक्रकलाहृतम् ।
स्फुटयोजनकर्णाख्यं कक्ष्याव्यासदलं रवेः ॥ २१ ॥
भागीकृतात् तदनु सङ्क्रमणार्कमध्या-
दब्दान्तदोःफलयुताद्धरणीदिनघ्नात् ।
सौरैर्दिनैरपहृतं खलु मासवाक्यं
सङ्क्रान्तिवाक्यमिह तत्सुहृतावशिष्टम् ॥ २२ ॥
नक्षत्रान्तस्फुटोत्पन्नमध्यार्कादेवमेव च ।
नयेन्नक्षत्रसङ्क्रान्तिवाक्यं कविषु पूर्वकम् ॥ २३ ॥
मासादितोऽष्टाष्टदिनोत्थसूर्य-
स्फुटान्तरांशाष्टदिनान्तराणि ।

योग्यादिवाक्यानि धनर्णतैषां
दिनाल्पताधिक्यवशाद्दिनाप्तौ ॥ २४ ॥

भौमादेः कृतमन्ददोःफलदलात्तत्केन्द्रतो दोःफलं
नीतं केवलमध्यमे धनमृणं मन्दस्फुटस्याप्तये ।
विद्भृग्वोर्निजमध्यमे मृदुफलं स्वोच्चोनमध्योद्भवं
नन्दघ्नं स्फुटशीघ्रवृत्तविहृतं कुर्यात् स मन्दस्फुटः
[ ॥ २५ ॥

स्वोपान्त्यान्त्यस्फुटाभ्यां निजनिजचलतु-
ङ्गोनिताभ्यां भुजाज्ये
नीत्वा त्रिज्याहताभ्यां विभजतु परया
शीघ्रकर्णस्तदा स्यात् ।
मन्दोच्चेनोनिताभ्यां श्रवणमपि नये-
न्मध्यमन्दस्फुटाभ्यां
मान्दा यत्र स्फुटाप्तिः पठितभुजफलै-
स्तत्र कर्णाप्तिरेवम् ॥ २६ ॥

दोर्ज्याभावे तु केन्द्रे सति मकरकुलीरादिके तत्र मान्दे
तद्वृत्तोनाढ्यनन्दैस्त्रिभगुणगुणितान्नन्दनान्मन्दकर्णः ।
शैघ्रे तद्वृत्तयुक्तोनितनदगुणिताद्विस्तराधान्नदाप्तो
भौमादेः शीघ्रकर्णः सततमपि विधोः शीघ्रकर्णो-
[ ऽन्त्यकर्णः ॥ २७ ॥

कर्णद्वयस्य वधतस्त्रिगुणेन लब्धं
केन्द्रग्रहान्तरमिनस्य तु तत् स्वकर्णः ।

